# श्रीलक्ष्मीनृसिंहकरुणारस अथवा करावलम्बस्तोत्रम्

श्रीमत्पयोनिधिनिकेतनचक्रपाणे
भोगीन्द्रभोगमणिराजितपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १॥ @१
ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटि-
सङ्घट्टिताङ्घ्रिकमलामलकान्तिकान्त ।
लक्ष्मीलसत्कुचसरोरुहराजहंस
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ २॥ @२
संसारघोरगहने चरतो मुरारे
मारोग्रभीकरमृगप्रचुरार्दितस्य । var मृगप्रवरर्धितस्य
आर्तस्य मत्सरनिदाघसुदुःखितस्य var निधाघनिपीडतस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ३॥ @४
संसारकूपमतिघोरमगाधमूलं
सम्प्राप्य दुःखशतसर्पसमाकुलस्य ।
दीनस्य देव कृपया पदमागतस्य var शरणागतस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ४॥ @५
संसारसागरविशालकरालकाल-
नक्रग्रहग्रसितनिग्रहविग्रहस्य । var ग्रहग्रसन
व्यग्रस्य रागनिचयोर्मिनिपीडितस्य var रागलसदूर्नमिनि
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ५॥ @३
संसारवृक्षमघबीजमनन्तकर्म-
शाखायुतं करणपत्रमनङ्गपुष्पम् ।
आरुह्य दुःखफलितं चकितं दयालो var दुःखजलधौ पततो
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ६॥ @९
संसारसर्पविषदिग्धमहोग्रतीव्र- var (घनवक्त्र)(विषदष्ट)भयोग्रतीव्र
दंष्ट्राग्रकोटिपरिदष्टविनष्टमूर्तेः । var दंष्ट्राकरालविषदग्ध
नागारिवाहन सुधाब्धिनिवास शौरे
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ७॥ @७
संसारदावदहनाकरभीकरोग्र- var दावदहनातुरभीकरोरु-
ज्वालावलीभिरतिदग्धतनूरुहस्य । var अभिदग्ध
त्वत्पादपद्मसरसीरुहमागतस्य var सरसीं शरणागतस्य, रुहमस्तकस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ८॥ @१०
संसारजालपतितस्य जगन्निवास
सर्वेन्द्रियार्थबडिशाग्रझषोपमस्य । var बडिशश्चझषात्मनश्च
प्रोत्कम्पितप्रचुरतालुकमस्तकस्य var प्रोत्तम्बित
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ९॥ @८

संसारभीकरकरीन्द्रकराभिघात-
निष्पीड्यमानवपुषः सकलार्तिनाश । var कलार्धितस्य
प्राणप्रयाणभवभीतिसमाकुलस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १०॥ @६
अन्धस्य मे हृतविवेकमहाधनस्य
चोरैर्महाबलिभिरिन्द्रियनामधेयैः ।
मोहान्धकारकुहरे विनिपातितस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ११॥

लक्ष्मीपते कमलनाभ सुरेश विष्णो
वैकुण्ठ कृष्ण मधुसूदन पुष्कराक्ष ।
(पाठभेद- यज्ञेश यज्ञ मधुसूदन विश्वरूप ।)
ब्रह्मण्य केशव जनार्दन वासुदेव
देवेश देहि कृपणस्य करावलम्बम् ॥ १२॥

यन्माययार्जितवपुःप्रचुरप्रवाह-
मग्नार्थमत्र निवहोरुकरावलम्बम् ।
लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन
स्तोत्रं कृतं सुखकरं भुवि शङ्करेण ॥ १३॥

There are variations of verses and sequence in different texts.
The additional verses are given below.
संसारसागरनिमज्जनमुह्यमानं
दीनं विलोकय विभो करुणानिधे माम् ।
प्रह्लादखेदपरिहारपरावतार
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १४॥ @११
बद्ध्वा गले यमभटा बहु तर्जयन्तः
var भद्राकशैर्यनुभटाबहुभर्तृयन्ति
कर्षन्ति यत्र भवपाशशतैर्युतं माम् ।
var कर्षन्ति यत्र पथि पाशशतैर्यथा माम्
एकाकिनं परवशं चकितं दयालो
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १५॥

एकेन चक्रमपरेण करेण शङ्ख-
मन्येन सिन्धुतनयामवलम्ब्य तिष्ठन् ।
वामेतरेण वरदाभयपद्मचिह्नं var वरदाभयहस्तमुद्रां
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १६॥

प्रह्लादनारदपराशरपुण्डरीक-
व्यासादिभागवतपुङ्गवहृन्निवास ।
var व्यासाम्बरीष शुकशौनक हृन्निवास
भक्तानुरक्तपरिपालनपारिजात
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १७॥

संसारयूथ गजसंहतिसिंहदंष्ट्रा
भीतस्य दुष्टमैदैत्य भयङ्करेण ।
प्राणप्रयाण भवभीति निवारणेन
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १८॥

लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन
स्तोत्रं कृतं शुभकरं भुवि शङ्करेण ।
ये तत्पठन्ति मनुजा हरिभक्तियुक्ता-
स्ते यान्ति तत्पदसरोजमखण्डरूपम् ॥ १९॥

आद्यन्तशून्यमजमव्ययमप्रमेय-
मादित्यरुद्रनिगमादिनुतप्रभावम् ।
त्वाम्भोधिजास्य मधुलोलुपमत्तभृङ्गीं
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ २०॥

वाराह-राम-नरसिंह-रमादिकान्ता
क्रीडाविलोलविधिशूलिसूरप्रवन्द्य! ।
हंसात्मकं परमहंस विहारलीलं
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ २१॥

स्वामी नृसिंहः सकलं नृसिंहः
माता नृसिंहश्च पिता नृसिंहः ।
भ्राता नृसिंहश्च सखा नृसिंहः
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ २२॥

प्रह्लादमानससरोजवासभृङ्ग!
गङ्गातरङ्गधवळाङ्ग रमास्थिताङ्क! ।
शृङ्गार सुन्दरकिरीटलसद्वराङ्ग
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ २३॥

श्री शङ्करार्य रचितं सततं मनुष्यः
स्तोत्रं पठेदिह तु सर्वगुणप्रपन्नम् ।

सद्योविमुक्तकलुषो मुनिवर्यगण्यो
  लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ २४॥

श्रीमन् नृसिंह विभवे गरुडध्वजाय
  तापत्रयोपशमनाय भवौषधाय ।
तृष्णादिवृश्चिक-जलाग्नि-भुजङ्ग-रोग
  क्लेशव्ययाम हरये गुरवे नमस्ते ॥ २५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ
लक्ष्मीनृसिंहकरुणारसस्तोत्रं अथवा
लक्ष्मीनृसिंहकरावलम्बस्तोत्रम् सम्पूर्णम् ॥